

## कविकुलगुरू-कालिदास-संस्कृत-विश्वविद्यालयस्य

## प्रकाशनम्

# संस्कृतवाग्विलासः

## द्वितीयमुद्रा



कविकुलगुरु-कालिदास-संस्कृत-विश्वविद्यालयस्य
प्रकाशनम्

# संस्कृतवाग्-विलासः

## द्वितीयमुद्रा

कविकुलगुरु-कालिदास-संस्कृत-विश्वविद्यालयः
रामटेकम् (नागपुरम्), महाराष्ट्रम्

कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयस्य
प्रकाशनम्

# संस्कृतवाग्–विलासः

## द्वितीयमुद्रा

प्रेरणा तथा मार्गदर्शनम्

**डॉ. उमा वैद्य (मा. कुलगुरुः)**

**प्रधानसम्पादकः**

डॉ. मधुसूदनः पेन्ना

**सम्पादकमण्डलम्**

डॉ. सी.जी. विजयकुमारः — डॉ. नन्दा पुरी
डॉ. ललिता चंद्रात्रे — डॉ. कृष्णकुमारः पाण्डेयः
डॉ. लीना रस्तोगी

**पाठलेखकाः**

डॉ. मधुसूदनः पेन्ना — डॉ. सी.जी. विजयकुमारः
डॉ. कलापिनी अगस्ती — डॉ. हरेकृष्णः अगस्ती
डॉ. शिवरामः भट्टः — डॉ. हृषीकेशः दलाई
श्री. परागः जोशी — डॉ. प्रसादः गोखले
प्रा. दिनकरः मराठे — सौ. रेणुका करंदीकर
डॉ. वीणा गानू — डॉ. मञ्जूषा चन्ने
प्रा. जय३वंत चौधरी — सौ. प्रियदर्शिनी पेंढारकर

**कागदम्** – ७० जीएस्एम्, मॉपलिथो
प्रकाशनवर्षम् – २०१३

**Reprint - 2018**
**ISBN NO : 978-81-921617-6-1**

**प्रकाशकः**
कुलसचिवः
कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः, रामटेकम्

# शुभाशंसन

संस्कृतभाषेचे अध्ययन करण्याची ज्यांची खूप इच्छा असते त्यांना संस्कृतची अनेक छोटी छोटी पुस्तके आज उपलब्ध आहेत. परंतु संस्कृतसाहित्याचा विकास ज्या क्रमाने झालेला दिसतो त्याप्रकारे पुस्तकाची निर्मिती केली तर विद्यार्थ्यांना खूप उपयोग होईल या संकल्पनेने हे पुस्तक तयार करण्यात आले आहे.

सुरुवातीस संधी, समासरहित संवाद व लेख दिले आहेत ज्यांच्या पठनाने विषयवस्तू सोप्या पद्धतीने समजते. त्यानंतर विविध सुभाषिते दिली आहेत. उदा. वैद्यकीयसुभाषितानि, संगीतप्रशंसा, आतिथ्यप्रशंसा पर्यावरणमहत्त्वम् इत्यादी विषय मांडले आहेत. विद्यार्थ्यांच्या सोयीकरिता आवश्यक ठिकाणी व्याकरण अंशांचे विवरण दिलेले आहे.

अशाच प्रकारे संस्कृतभाषेतील साहित्य व विज्ञानाच्या प्रचाराकरिता संस्कृतपुस्तकांचे निर्माण विश्वविद्यालयाद्वारा करण्यात येईल. अशा क्रमाने प्रकाशित होणाऱ्या पुस्तकमालिकेचे 'संस्कृतवाग्विलासः' असे शीर्षक आहे. या पुस्तकाच्या माध्यमाने संस्कृतवाणीच्या वैभवाचे चांगले दर्शन घडो या हेतूने 'संस्कृतवाग्विलासः' असे शीर्षक देण्यात आले आहे. क्रमाक्रमाने एक एक पुस्तक पुढे एक एक 'मुद्रा' बनेल. ज्या प्रकारे विलासाच्या विविध मुद्रा असतात त्याप्रमाणे संस्कृतवाग्विलासाच्या या पुस्तकरूपी मुद्रा प्रकाशित केल्या जातील.

प्रस्तुत पुस्तक संस्कृतवाग्विलासाची द्वितीय-मुद्रा ह्या रूपाने प्रकाशित करण्यात येत आहे. एकूण आठ मुद्रांच्या रूपाने संस्कृत-पुस्तकांचे प्रकाशन करण्याचा संकल्प केला आहे.

या पुस्तकांद्वारा जिज्ञासू विद्यार्थ्यांना संस्कृतभाषेतील व भाषेसंबधी विविध ज्ञान प्राप्त होईल. संस्कृत ही प्राचीन भारताची ज्ञानभाषा आहेच ती लोकभाषा म्हणूनही विराजमान होवो! सर्व जिज्ञासू ज्ञानार्थींना माझ्याकडून शुभकामना !



– कुलगुरु

## प्रतिज्ञा

भारतः मम देशः। सर्वे भारतीयाः मम बान्धवाः। भारतदेशे अहं सर्वदा स्निह्यामि। अस्य देशस्य याः समृद्धाः विविधाश्च परम्पराः ताः प्रति मम शिरः अभिमानेन उन्नतं भवति। तासां परम्पराणाम् अनुगमनं कर्तुम् आसादयितुं च अहं सदा प्रयतिष्ये।

अहं पितरौ गुरून् वयोज्येष्ठान् प्रति च आदरेण वर्तेय। सर्वान् प्रति सौजन्येन व्यवहरेयम्। अहं मम राष्ट्रेण देशबान्धवैश्च सह एकान्तनिष्ठम् आचरणं करोमि इति प्रतिजाने। तेषां कल्याणे समुत्कर्षे च मम आत्यन्तिकं सौख्यं विनिहितम् अस्ति।

**जयतु संस्कृतम्। जयतु भारतम्।**

# शुभाशंसनम्

संस्कृतस्य अध्ययनं कर्तुं येषां महती इच्छा वर्तते तेषां कृते लघुस्वरूपाणि पुस्तकानि बहूनि उपलभ्यन्ते। परन्तु संस्कृतस्य वाङ्मयविकासे यः क्रमः दृश्यते तदनुसारं पुस्तकस्य निर्माणेन छात्राणां महान् उपकारः भवेत् इति संकल्पेन पुस्तकस्य अस्य निर्माणं कृतम्।

आदौ सन्धि–समासवर्जिताः संवादाः लेखाः च दत्ताः येषाम् अध्ययनेन विषयः ज्ञातः स्यात्, ज्ञाने कठिनता च न भवेत्। तदनन्तरं श्लोकात्मकं सुभाषितादिकं दत्तम्। वैद्यकीयसुभाषितानि, सङ्गीतप्रशंसा, आतिथ्यप्रशंसा, पर्यावरणमहत्त्वम् इत्यादयः विषयाः दत्ताः। छात्राणाम् उपयोगाय आवश्यकस्थलेषु व्याकरणविवरणम् अपि दत्तम्। एतस्य पठनेन छात्राणां रुचिः वर्धताम् इति मम शुभाशंसनम्।

एवमेव संस्कृतभाषायाः साहित्यस्य विज्ञानस्य च प्रचाराय संस्कृतपुस्तकानां निर्माणं विश्वविद्यालयद्वारा भविष्यति। एवं क्रमेण प्रकाशयिष्यमाणानां पुस्तकानां ''संस्कृतवाग्विलासः' इति सामान्यं नामकरणं कृतम्। एतेषां पुस्तकानां माध्यमेन संस्कृतवाचः विलासस्य सम्यक् ज्ञानं भवतु इति विचारः अस्य नामकरणे कारणम्। क्रमेण एकमेकं पुस्तकं 'मुद्रा' इति भविष्यति। यथा विलासस्य बहुषु प्रकारेषु सत्सु विविधाः मुद्राः अपि भवन्ति तथा संस्कृतवाग्विलासस्यापि मुद्राः पुस्तकरूपेण प्रकाशयिष्यन्ते।

पुस्तकम् इदं संस्कृतवाग्विलासस्य द्वितीयमुद्रा–रूपेण प्रकाशितम्। आहत्य अष्टमुद्राणां रूपेण संस्कृतपुस्तकानां प्रकाशनं संकल्पितं वर्तते।

एतेषां पुस्तकानां माध्यमेन ज्ञानार्थिनः संस्कृतविषयकं संस्कृते वर्तमानं ज्ञानं प्राप्नुवन्तु। संस्कृतभाषा भारतवर्षे प्राचीनज्ञानभाषा वर्तते एव। सा लोकभाषा अपि भूत्वा लोके विराजताम् इति आशास्यते। सर्वेभ्यः ज्ञानार्थिभ्यः मम शुभकामनाः।



– कुलगुरुः

# अनुक्रमणिका

# १. सुभाषितानि



**१) सरस्वति नमस्तुभ्यं, सर्वेभ्यो ज्ञानदायिनि ।**

**सर्वदा सर्वकार्येषु, सर्वदा वरदा भव ।।१ ।।**

**अन्वयः–** हे सर्वेभ्यः ज्ञानदायिनि सरस्वति तुभ्यं नमः। सर्वदा सर्वकार्येषु सर्वदा वरदा भव।

**भाषांतर –** हे ज्ञानदायिनी सरस्वती तुला नमस्कार असो. तू सर्वांना ज्ञान देणारी, सर्वकार्यांमध्ये सतत वरदान देऊन सर्वविध दान देणारी व्हावेस .तात्पर्य, सरस्वती देवीच्या आशीवार्दानेच आपण सर्वत्र यश प्राप्त करू शकतो हेच या श्लोकाचे तात्पर्य आहे.

**२) अयं निजः परो वेति गणना लघुचेतसाम् ।**

**उदारचरितानां तु वसुधैव कुटुम्बकम् ।।२ ।।**

**अन्वयः–** अयं निजः परः वा इति गणना लघुचेतसाम् (भवति)। उदारचरितानां तु वसुधा एव कुटुम्बकम्।

**भाषांतर–** 'हा माझा हा परका' असा भेदभाव क्षुद्रविचारांनी ग्रस्त असलेले लोक करतात. पण विशालहृदय असलेले म्हणजेच उदात्तविचारांनी समृद्ध लोकासांठी संपूर्ण विश्वच (जणू स्वतःचे) कुटुंब असते.

**३) गुणाः सर्वत्र पूज्यन्ते पितृवंशो निरर्थकः ।**



**वासुदेवं नमस्यन्ति वसुदेवं न मानवाः ।।३ ।।**

**अन्वयः–** गुणाः सर्वत्र पूज्यन्ते पितृवंशः निरर्थकः (भवति)। मानवाः वासुदेव नमस्यन्ति न वसुदेवम्।

**भाषांतर–** सर्वत्र गुणांचीच पूजा केली जाते. पितृवंश त्याठिकाणी महत्त्वाचा नसतो.

या जगात श्रीकृष्ण स्वतःच्या गुणांमुळेच पूज्य आहे. तात्पर्य, माणसे श्रीकृष्णाला नमस्कार करतात,वसुदेवाला नाही.

**४) गङ्गा पापं शशी तापं दैन्यं कल्पतरुर्हरेत् ।**
**पापं तापं च दैन्यं च हरेत्साधुसमागमः ।।४।।**

**अन्वयः**- गङ्गा पापं शशी तापं, कल्पतरुः दैन्यं हरेत्। (परन्तु) पापं तापं च दैन्यं च साधुसमागमः हरेत्।

**भाषांतर**- गंगानदी पापक्षालन करते. चंद्र संताप (मनाचा ताप) दूर करतो. आणि कल्पवृक्षामुळे दैन्यावस्था दूर होते. परंतु पाप, ताप आणि दारिद्रय या तिघांचाही नाश सज्जनसहवासाने एकाचवेळी होतो. तात्पर्य, गंगानदीचे पावित्र्य, चंद्राची शीतलता आणि कल्पतरुचे सर्वकामनापूर्तीचे सामर्थ्य फक्त सज्जनांच्या सहवासात आहे.

**उद्यमः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः ।**
**षडेते यत्र वर्तन्ते तत्र देवः सहायकृत् ।।५।।**

अन्वयः- यत्र उद्यमः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः षडेते वर्तन्ते तत्र देवः सहायकृत् (भवति)

**भाषांतर**-ज्याच्या अंगी परिश्रम,बळ, धैर्य,प्रज्ञा सामर्थ्य आणिशौर्य हे गुण आहेत त्याचा देव सहायकर्ता होतो. सतत मित्रअसतो. याचाच अर्थ या सहा गुणांनी परिपूर्णपुरुष कधीही असफल होत नाही. कारण त्याला देव मदत करतो.



# २. आपणम्

वसुधा पादत्राणे धारयति। गृहात् बहिः गमनाय सिद्धा भवति। मुकुन्दः तां पश्यति। वसुधायाः हस्ते स्यूताः सन्ति।

मुकुन्दः – अम्ब, कुत्र गच्छसि?

वसुधा – वत्स, अहं भोजनस्य कृते शाकम् इच्छामि। अतः आपणं गच्छामि, शाकं च आनयामि।

मुकुन्दः – अम्ब, अहम् अपि आगच्छामि त्वया सह।

वसुधा – तर्हि आगच्छ। आवां गच्छावः

माता च पुत्रः च विपणिं गच्छतः। तत्र बहूनि आपणानि सन्ति। वसुधा सर्वत्र पश्यति।

वसुधा – वत्स, एषु आपणेषु बहवः जनाः सन्ति। आवां तम् आपणं गच्छावः। उभौ आपणं प्रविशतः।



वसुधा – बन्धो, शाकम् इच्छामि। कानि कानि शाकानि तव आपणे?

आपणिकः – भगिनि, अद्य मम आपणे बहूनि शाकानि सन्ति। भिण्डयः, वृन्ताकाः, बृहद्मरीचिकाः सन्ति। कूष्माण्डः अस्ति। तण्डुलीकः, मेथिका च स्तः।



वसुधा – अपि कुस्तुम्बरु, मरीचयः, आर्द्रकम्, वार्तक्यः सन्ति?

आपणिकः – अथ किम्। सर्वम् अस्ति। किं क्रीणाति, भागिनि?

मुकुन्दः – अम्ब,पश्य, अत्र आम्रम् अपि अस्ति। अहम् इच्छामि।

वसुधा – बाढम्। बन्धो, द्वे आम्रफले यच्छ। भिण्डीः तण्डुलीकं, कूष्माण्डम् अपि यच्छ प्रत्येकम् अर्धकिलोमात्रम्। कुस्तुम्बरुम्, आर्द्रकम् अपि यच्छ।

आपणिकः – एते द्वे आम्रफले स्वीकुरु, वत्स। कुत्र तव स्यूतम्?

वसुधा – पश्य, एतं स्यूतम्। एतौ स्यूतौ शाकाय।

(आपणिकः मुकुन्दाय एकस्मिन् स्यूते आम्रफले यच्छति। द्वयोः स्यूतयोः शाकं स्थापयति।)

आपणिकः – प्रत्यग्राः शृङ्गाटकाः अपि सन्ति। यच्छामि किम्?

मुकुन्दः – अम्ब, पश्य क्रीडनकस्य आपणम्। अहं कन्दुकम् इच्छामि।

वसुधा – मुकुन्द, मुहुर्तं तिष्ठ। बन्धो, शृङ्गाटकं न इच्छामि। एतस्य शाकस्य मूल्यम् अहं तुभ्यं यच्छामि। सम्यक् गणय।

आपणिकः – साधु, साधु।

वसुधा – मुकुन्द, गृहे द्वौ कन्दुकौ स्तः। तौ यच्छामि तुभ्यम्।

मुकुन्दः – बाढम्, कन्दुकाभ्यां खेलामि अहम्। चल अम्ब, सत्वरं गृहं चल। वसुधा मुकुन्दःच गृहम् आगच्छतः।


वृन्ताकम्


गृञ्जकम्

मरीचिका


कारवेल्लम्




गोजिह्वा


भिण्डी

# ३. संस्कृतभाषामहत्त्वम्




माता – माधवि किं करोषि? किं चिन्तयसि?

माधवी – मातः, संस्कृतभाषायाः अध्ययनम् आवश्यकम् अस्ति किम्? इति मम चिन्ताविषयः।

माता – अयि पुत्रि, अस्मिन् विषये मम तावत् ज्ञानम् न अस्ति।

माधवी – एवं चेत्, कः मम समाधानं कर्तुं शक्नोति?

माता – मृदुला, सा विद्यालये संस्कृतभाषाम् एव पाठयति खलु। (ततः मृदुला प्रविशति)

माधवी – मातः, मृदुला अत्रैव आगच्छति। तां पृच्छामि किम्?

मृदुला – स्वैरं पृच्छतु।

माता – मृदुले, भवती एव अस्याः प्रश्नस्य उत्तरं ददातु॥

माधवी – संस्कृतभाषायाः अध्ययनं किमर्थम् आवश्यकम्?

मृदुला – माधवि, उत्तमः प्रश्नः। अन्यासां भारतीयभाषाणाम् अध्ययने सौकर्यम् इति प्रथमः लाभः।

माता – मृदुले, कथम्?

मृदुला – शृणु, अस्मांक सर्वासु भारतीयभाषासु संस्कृतशब्दाः अधिकाः वर्तन्ते।



माधवी – भवतु, किन्तु तेन किम्?

मृदुला – संस्कृतभाषायाः अध्ययनेन सर्व–भारतीय–भाषाणां ज्ञानं शीघ्रं भवति।

माधवी – एवम्। अतः एव 'संस्कृतभाषा अनेकभारतीयभाषाणां जननी'

इति कथयन्ति खलु।

मृदुला – साधु माधवि। न तावदेव, अस्माकं मातृभाषायाः सौन्दर्यम् अपि वर्धते तया भाषया।

माता – मृदुले, मातृभाषासौन्दर्यम् ? कथम् एतत्?

मृदुला – संस्कृतशब्दानां वा संस्कृतसुभाषितानां वा सम्भाषणे प्रयोगं कुर्वन्ति चेत् मातृभाषामाधुर्यं वर्धते खलु।

माधवी – अहह! अतः वक्तारः संस्कृत-उद्धरणैः एव निजं भाषणं प्रभावपूर्णं कुर्वन्ति।

मृदुला – अथ किम्? अपि च अस्माकं प्राचीनं साहित्यं विज्ञानम् अपि अनया भाषया ज्ञातुं शक्यते।

माता – एवं नु? प्राचीनस्य साहित्यस्य अर्थज्ञानं भवति किम्?

मृदुला – निश्चयेन मातः। वेदाः, पुराणानि, उपनिषदः च संस्कृतभाषायाम् सन्ति।

माधवी – अयि, अस्माकं पुस्तकेषु याः बोधकथाः सन्ति तासाम् अन्ते पुराणस्य नामोल्लेखः भवति।

मृदुला – आम्, संस्कृतभाषातः अनुवादं कृत्वा पाठ्यांशे तासां कथानाम् समावेशः दृश्यते।

माता – मृदुले, अहं प्रतिदिनं भगवतः स्तोत्रं पठामि किन्तु तस्य अर्थं न जानामि।

मृदुला – तदर्थमपि संस्कृतभाषायाः अध्ययनम् आवश्यकम्।

माधवी – भवत्याः वचनं यद्यपि सत्यं तथापि अद्य तस्याः अध्ययनेन धनार्जनं तु शक्यं नास्ति नु ।

मृदुला – शृणु, भाषायाः अध्ययनस्य उद्दिष्टं न केवलं धनार्जनम् अपि तु संस्काराणां वर्धनं मानवतायाः रक्षणं च अस्ति।

माता – उचितम् एव भवत्याः कथनम्। अद्य अस्माकं देशे याः याः समस्याः दृश्यन्ते ताः अन्यायेन एव उद्भूताः सन्ति।



मृदुला – स्वकर्तव्यस्य पालने अनवधानं तत्र मुख्यकारणम्। चौर्यं, भ्रष्टाचारः धूर्तव्यवहारः, परस्परद्वेषकारणात् मनस्तापः च सर्वत्र दृश्यन्ते।

मानवी – संस्कृतभाषायाः अध्ययनेन तासां समस्यानां निवारणं शक्यं किम्?

मृदुला – आं माधवि ! नैतिकतापाठः तस्याः भाषायाः ज्ञानेन भवति।

माता – एवं नु! स्पष्टीकरोतु।

मृदुला – अस्माकं ग्रन्थेषु न केवलम् उपदेशः दत्तः अपि तु सोदाहरणं सर्वं विवेचितम्।

माधवी – तस्य उपदेशस्य परिणामः अपि भवति खलु।

मृदुला – आम्, एवमेव। तथैव प्राचीनसाहित्यस्य रक्षणम् अपि अस्माकं कर्तव्यम्।

माता – सत्यं भोः। तदपि प्रधानम् उद्दिष्टम्। एवं न क्रियते चेत् अस्माकं साहित्यसम्पत् लुप्ता भवेत्।

मृदुला – भविष्यत्काले अपि जनाः एतेभ्यः ग्रन्थेभ्यः ज्ञानं प्राप्नुवन्तु इत्येव अस्माकं ध्येयम्।

माधवी – अस्माकं प्राचीनग्रन्थानां ज्ञानस्य च रक्षणाय अहं संस्कृतभाषाम् अवश्यं पठामि।





**नवभारत-निर्माणे महद् योगदानं कृतवन्तः डॉ. आंबेडकरमहोदयाः संस्कृतभाषायाः आवश्यकतां प्रशंस्य राष्ट्रभाषारूपेण संस्कृतस्य समर्थनं कृतवन्तः इति संस्कृतभाषाप्रणयिनाम् आनन्दाय भवति।**

# ४. वेदः




**शिष्यः** – आचार्य! वेदविज्ञानम् अत्यन्तं विशिष्टम् इति वदन्ति खलु। अत्र अहं किञ्चित् ज्ञातुम् इच्छामि। वेदः नाम कः?

**आचार्यः** – वेदः नाम ज्ञानराशिः। ''सर्वज्ञानमयो हि सः'' इति स्मृतिकाराः अवदन्।अतः वेदः नाम ज्ञानम् एव। प्राचीनः सायणाचार्यः 'इष्टं प्राप्तुम् अनिष्टं दूरीकर्तुं यः अलौकिकम् उपायं वेदयति सः वेदः' इति व्याख्यानं कृतवान्।

**शिष्यः** – वेदशब्दस्य अयम् अर्थः कथम् अभवत्?

**आचार्यः** – विद् ज्ञाने इति धातोः एव अयं शब्दः निष्पन्नः।

**शिष्यः** – आचार्य! वेदाः कति? ते च के?कृपया वदतु भवान्।

**आचार्यः** – वेदाः चत्वारः सन्ति। ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदः इति। अयं विभागः व्यासमहर्षिणा कृतः इति संप्रदायः।

**शिष्यः** – आचार्य ! ''स्त्रियाम् ऋक्सामयजुषी इति वेदाः त्रयः त्रयी'' इति अमरकोशे त्रयः एव वेदाः उक्ताः सन्ति खलु! तर्हि चतुर्थस्य वेदस्य उल्लेखः केन कृतः?

**आचार्यः** – सत्यम्। व्यासः आदौ ऋग्वेदादीनां त्रयाणां वेदानां विभागम् अकरोत्। अनन्तरम् अङ्गिराः महर्षिः अथर्ववेदम् अपश्यत्।

**शिष्यः** – वेदानां शाखाः अपि सन्ति वा? प्राचीने काले वेदशाखानाम् उल्लेखः कुत्र अस्ति?



**आचार्यः** –महाभाष्ये पतञ्जलिः ऋग्वेदस्य एकविंशतिः, यजुर्वेदस्य शतम् सामवेदस्य सहस्रम्, अथर्ववेदस्य नव शाखाः सन्ति इति अवदत्।

**शिष्यः** – प्रत्येकं वेदः अपि पुनः विभागम् अर्हति वा?

**आचार्यः** - सत्यम्। प्रत्येकं वेदस्य अपि संहिता, ब्राह्मणम्, आरण्यकम्, उपनिषद्, इति चत्वारः विभागाः वर्तन्ते।

**शिष्यः** - 'अध्वर्युः' इति अहम् अश्रुणवम्। सः कः भवति?

**आचार्यः** - चतुर्णां वेदानां चत्वारः अधिकारिणः सन्ति। ऋग्वेदस्य होता, यजुर्वेदस्य अध्वर्युः, सामवेदस्य उद्गाता, अथर्ववेदस्य ब्रह्मा च अधिकारी इति। तत्र यजुर्वेदस्य अधिकारी भवति अध्वर्युः।

**शिष्यः** - आचार्य ! वेदानां स्वरूपं किम्?

**आचार्यः** - ऋग्वेदः प्रार्थनारूपः छन्दोनिबद्धः वर्तते। यजुर्वेदः गद्यात्मकः यज्ञविधानबोधकः अस्ति। सामवेदः पद्यात्मकः देवतानां स्तुतिरूपः विद्यते। अथर्ववेदः मारणं, मोहनम्,उच्चाटनम् इत्यादीनाम् आभिचारिककर्माणाम् आयुर्वेद-शकुन-पशुविद्यादीनां बोधकः अस्ति। वेदः एव अस्माकं संपूर्णस्य संस्कृतवाङ्मयस्य मूलाधारः। अत्र विज्ञानं, तत्त्वज्ञानं तदितरं च सर्वं वर्णितम्। उपनिषदः वेदभागाः खलु। इतः एव भारतीयतत्त्वज्ञानस्य विकासः जातः। प्रायः सर्वे वेदान् प्रमाणरूपेण स्वीकृत्य विचारं प्रवर्तयन्ति। रामायणं, महाभारतं,पुराणानि, महाकाव्यानि, नाटकानि इति सर्वं वाङ्मयं वेदम् आश्रित्य विकसितम्। अतः वेदः नाम ज्ञानम्।

**शिष्यः** - धन्योऽस्मि आचार्य! यद् अद्य मम वेदस्य स्थूलं ज्ञानम् अभवत्।





# ५. उपनिषदः



वैदिकसाहित्यस्य अन्तिमः भागः नाम उपनिषद्। वेदानां सारभूतं तत्त्वं प्रकाशयन्ति उपनिषदः। अतः उपनिषदाम् अन्यतमं नाम वेदान्तः इति अस्ति। उप–नि–उपसर्गपूर्वकस्य 'सद्'–धातोः क्विप्–प्रत्ययेन उपनिषद् इति शब्दः निष्पन्नः। अस्य शब्दस्य 'गुरोः सकाशात् ज्ञानप्राप्तिः' इति अर्थः। शिष्यः गुरोः समीपे उपविश्य यत् तत्त्वज्ञानं स्वीकरोति तत् उपनिषद् भवति। भारतीयदर्शनस्य मूलं बीजं उपनिषत्सु अस्ति। एकैकस्य वेदस्य उपनिषदः निश्चिताः भवन्ति। मुक्तिकोपनिषदि उपनिषदां संख्या अष्टोत्तरशतम् इति वर्णिता अस्ति। परन्तु दश उपनिषदः प्रमुखाः तासाम् उपनिषदां परिचयं संक्षेपेण दीयते।

**ईश–उपनिषद्** –शुक्लयजुर्वेदस्य माध्यन्दिनशाखायाः उपनिषद् अस्ति। माध्यन्दिनशाखायाः चत्वारिंशतमस्य अध्यायस्य नाम ईश–उपनिषद् इति। 'ईशावास्यमिदं सर्वम्' इति अनेन मन्त्रेण उपनिषदः आरम्भः भवति। अनेन उपनिषदः तदेव नाम अभवत्। 'ॐ पूर्णम् अदः पूर्णम् इदं...' इति प्रसिद्धः मन्त्रः अस्याम् उपनिषदि स्थितः। अस्यां अष्टादशमन्त्राः सन्ति।

**केन–उपनिषद्**– सामवेदेन सम्बद्धा एषा उपनिषद्। जैमिनीयसंहितायाः नवमः अध्यायः केनोपनिषत्।अत्र चत्वारः खण्डाः सन्ति।''केनेषितं पतति' इति अनेन मन्त्रेण उपनिषदः नाम अभवत्। अस्याः उपनिषदः चत्वारः भागाः सन्ति। प्रसिद्धम् उमाहैमवती–उपाख्यानम् अस्याम् उपनिषदि वर्तते।



**कठ–उपनिषद्**–कृष्णयजुर्वेदस्य काठकशाखायाः ब्राह्मणभागः एषा उपनिषद् अस्ति अस्याम् उपनिषदि द्वौ अध्यायौ षट् वल्ल्यः च सन्ति। यम–नचिकेतयोः संवादः अस्याम् उपनिषदि ग्रथितः। लोककल्याणाय उपयुक्ता अग्निविद्या अत्र विशदेन प्रकाशिता वर्तते।

**प्रश्न–उपनिषद्**–इयम् अथर्ववेदस्य पैप्पलादशाखायाः उपनिषद्। शिष्याणां



प्रश्नानाम् उत्तरं दत्त्वा गुरुः आत्मज्ञानं प्रकटयति।

**मुण्डक-उपनिषद्**-एषा उपनिषद् अथर्ववेदस्य शौनकसंहितायाः भागः। अस्यां त्रयः भागाः सन्ति। एते भागाः मुण्डकनाम्ना प्रसिद्धाः। 'सत्यमेव जयते...' ''नायमात्मा बलहीनेन लभ्यः...' इत्यादयः प्रसिद्धाः मन्त्राः अस्यां उपनिषदि सन्ति। ब्रह्मा अथर्वनामकाय ज्येष्ठपुत्राय ब्रह्मविद्याम् उपदिशति।

**माण्डूक्य-उपनिषद्**-अथर्ववेदेन सम्बद्धा एषा उपनिषद्। आकारेण लघ्वी अस्ति चेत् अपि अत्र विषयस्य गाम्भीर्यं सर्वथा दृश्यते।

**तैत्तिरीय-उपनिषद्**-कृष्णयजुर्वेदस्य तैत्तिरीयारण्यकस्य खण्डत्रयम् (७,८,९)एव एषा उपनिषद्। अस्यां त्रयः प्रपाठकाः सन्ति। त्रिषु प्रपाठकेषु एकत्रिंशत् अनुवाकाः सन्ति। 'सत्यं वद धर्मं चर,' 'मातृदेवो भव...' इत्यादि प्रसिद्धम् उपदेशामृतम् अस्याः उपनिषदः लभ्यते।

**ऐतरेय-उपनिषद्**-ऋग्वेदस्य ऐतरेयारण्यकस्य अध्यायत्रयम् (४,५,६)उपनिषद् एषा। अस्याम् उपनिषदि त्रयः अध्यायाः सन्ति। आत्मा जगतः आदितत्त्वम्, मानवजीवनस्य क्रमः इत्यादयः विषयाः अस्याम् उपनिषदि सन्ति।

**छान्दोग्य-उपनिषद्**-अस्याः उपनिषदः सम्बन्धः सामवेदस्य कौथुमशाखया सह भवति। अष्टौ अध्यायाः अत्र सन्ति। 'सर्वं खल्विदं ब्रह्म' इति प्रसिद्धं वचनम् अस्याम् उपनिषदि वर्तते।

**बृहदारण्यक-उपनिषद्**- प्राचीनतमा इयम् उपनिषद् यजुर्वेदन सह सम्बद्धा अस्ति। शुक्लयजुर्वेदस्य शतपथब्राह्मणस्य चरमाः षड्-अध्यायाः एव एषा उपनिषत्। याज्ञवल्क्य-मैत्रेयीसंवादः, जनक-याज्ञवल्क्ययोः ब्रह्मविषयकः संवादः, आरुणेः ब्रह्मविषयकः उपदेशः अस्याम् उपनिषदि वर्तते।



प्राचीनकालाद् प्रवाहन्ती उपनिषद्रूपिणी एषा तत्त्वज्ञानरूपगङ्गा अद्यापि विश्वे जनमानसं पावयति। अतः उपनिषदः अस्माकं संस्कृतौ विशिष्टं स्थानं भजन्ते।



# ६. वेदाङ्गानि



एकदा शौनकर्षिः अङ्गिरसं पृष्टवान् 'केन ज्ञानेन सर्वज्ञानं भवेत् इति'? तदा गुरुः अङ्गिरसम् उक्तवान्, 'चतुर्णां वेदानां वेदाङ्गानां च ज्ञानेन सर्वज्ञानं भवति 'इति।

वेदस्य अङ्गानि वेदाङ्गानि इति उच्यन्ते। अङ्गं नाम उपकारकं वस्तुपुस्तकं शास्त्रम्। वेदानाम् अर्थज्ञाने यत् उपकारकं तत् वेदाङ्गम्। उपनिषदां कालाद् आरम्भ वेदाङ्गानाम् अध्ययनम् आरब्धम्। वेदानां सम्पूर्णज्ञानार्थं वेदाङ्गानां ज्ञानम् आवश्यकम् अस्ति। वेदानां प्रामाण्यं शुद्धता अधिकारश्च रक्षितव्याः इति वेदाङ्गानां कार्यम् अस्ति। वेदाङ्गानि षड् उच्यन्ते यथा–

**छन्दःपादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।**
**ज्योतिषामयनं चक्षुः निरुक्तं श्रोत्रमुच्यते।।**
**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।**
**तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते।। इति।**

एवं शिक्षा, कल्पं, व्याकरणं, निरुक्तं, छन्दः तथा ज्योतिःशास्त्रं च इति एतानि षट् अङ्गानि सन्ति।

### १. शिक्षा

पुरातनकाले उपनयनसंस्कारात् अनन्तरमेव गुरवः बटौ व्याकरणज्ञानं वितरन्ति स्म। तेन च वर्णानाम् उच्चारणस्थानस्य प्रयत्नस्य अपि ज्ञानं भवति स्म। (अनन्तरं वेदाध्ययनं कर्तुं सः समर्थः भवति। एवं च वेदाध्ययनस्य आरम्भः वेदाङ्गपठनाद् अनन्तरमेव उपयुक्तः इति सम्प्रदायः।)

एषु वेदाङ्गेषु प्रथमं वेदाङ्गं 'शिक्षा' इति अस्ति।

''ॐ अथ शिक्षां व्याख्यास्यामः'' इत्युक्त्वा वर्ण–स्वर–मात्रा–बल–सामा इति शिक्षायाः विषयाः प्रोक्ताः। शिक्षाग्रन्थेषु वर्णानां सामान्यचर्चा भवति। शिक्षाशब्दस्य वर्णानाम् उच्चारणशास्त्रम्' इति अस्ति अर्थः। शिक्षाग्रन्थानां सङ्ख्या पञ्चषष्टिः इति अस्ति।



### २. कल्पः

द्वितीयं वेदाङ्गं 'कल्प' इति अस्ति। 'कल्प' इति अस्य शब्दस्य अर्थः

'विधिविधानम्' इति। कल्पसूत्रस्य प्रकारत्रयं विद्यते १) श्रौतसूत्रम्, २) धर्मसूत्रम्, ३) गृह्यसूत्रम् च। श्रौतसूत्रेषु यज्ञविधेः नियमाः वर्णिताः। धर्मसूत्रेषु समाजविषयकाः राजकीयाः च नियमाः वर्णिताः। गृहस्थधर्मस्य संस्कारादिविषयाः सूत्रेषु वर्णिताः कल्पसूत्राणि 'स्मृति' ग्रन्थाः भवन्ति। केचन शुल्बसूत्राणाम् अपि अन्तर्भावं कल्पे कुर्वन्ति।

**३. व्याकरणम्**

तृतीयं वेदाङ्गं 'व्याकरणम्' इति। व्याकरणं वेदपुरुषस्य मुखम् इति उच्यते। वाङ्मये प्रयुक्तानां शब्दानां शुद्धाशुद्धविचारः व्याकरणेन एव भवति। संस्कृत- व्याकरणस्य द्रष्टा 'पाणिनि' महर्षिः इति सर्वश्रुतम्। तस्य व्याकरणम् 'अष्टाध्यायी' इति प्रसिद्धम्।

**४.निरुक्तम्**

चतुर्थं वेदाङ्गं 'निरुक्तम्'। यास्काचार्यः निरुक्तकारः। वेदानाम् अर्थं स्पष्टयितुं व्याकरणं निरुक्तम् इत्येतयोः महत्त्वम् असाधारणं विद्यते। निरुक्तशास्त्रम् अतीव प्राचीनम् अस्ति। 'निघण्टुः' नामक वैदिक-शब्दकोशस्य यास्काचार्येण विरचिता टीका निरुक्तम् इति उच्यते।

**५. छन्दः**

पञ्चमम् अङ्गं 'छन्दस्' इति अस्ति। वेदाः 'छन्दांसि' इति इति पुरुषसूक्ते कथितम्। 'अक्षरेण मिमते सप्तवाणीः' इत्येवं ऋग्वेदे प्राप्यते। एतदनुसारं ऋग्वेदकालाद् आरभ्य एव छन्दःशास्त्रस्य अध्ययनम् आरब्धम्। छन्दःशास्त्रे वैदिकानां लौकिकानां च छन्दसां विचारः भवति।

**६. ज्योतिषम्**

ज्योतिषम् इति षष्ठम् अङ्गम्। **लगधाचार्यस्य** वेदाङ्गज्योतिषग्रन्थःप्रसिद्धः। नक्षत्राणां ग्रहाणां च विचाराः अत्र सन्ति।

**यथा शिखा मयूराणां नगानां मणयो यथा।**
**तद्वत् वेदाङ्गशास्त्राणां ज्योतिषं मूर्धनि स्थितम्।।**

इत्यनेन श्लोकेन वेदाङ्गज्योतिषं श्रेष्ठम् इति वर्णितम्। वेदाङ्गज्योतिष इत्यस्य ग्रन्थस्य कर्ता लगध इति कथ्यते। वेदसंहिता यज्ञार्थम् अस्ति, 'ज्योतिषं वेद स वेद यज्ञान्' इति एताभ्यां वचनाभ्यां यज्ञः ज्योतिषम् इत्येतौ परस्परं सबद्धौ इति सिद्धम्।





# ७. पुराणानि

भारतीयधर्मस्य महत्त्वपूर्णम् अङ्गं नाम पुराणम्। पुराणं पुरातनम् आख्यानम् उच्यते। प्राचीनत्वम् इति 'पुराण' इत्यस्य सामान्यः अर्थः। तथापि पुराणानि वेदार्थानां पूरणं



कुर्वन्ति अतः 'पूरणात् पुराणम्' इत्यपि व्युत्पत्तिः विद्यते। वेद–वेदाङ्गानाम्, उपनिषदां ज्ञाता अपि पुराणानाम् अज्ञानेन परिपूर्णः न मन्यते। भारतस्य पुरातनः इतिहासः, पुरातनः भूगोलः, प्राचीनानां राज्ञां वंशावलिः, विज्ञानं, सृष्टिविकासः, कथानकानि इत्यादयः विषयाः पुराणेषु समाविष्टाः सन्ति। एवं विषयानुसारं पुराणशब्दस्य विविधाः व्याख्याः प्रसिद्धाः –

**पुरा भवं पुराणम्** – इयं व्याख्या पुराणानां प्राचीनतां दर्शयति।

**पुरा परम्परा वक्ति पुराणं तेन वै स्मृतम्।** – व्याख्यैषा पुराणानां प्राचीनपरम्परावर्णनस्य सामर्थ्यं द्योतयति।

**विश्वसृष्टेः इतिहासः पुराणम्** – विश्वस्य उत्पत्तेः इतिहासः पुराणेषु अन्तर्भूतः इति अनया व्याख्यया ज्ञायते।

एवं पुराणानि वेदार्थेन सह विश्वस्य इतिहासम् अपि कथयन्ति। अतः विदेशीयाः पण्डिताः अपि पुराणग्रन्थान् सादरं पठन्ति। भारतीयधर्मस्य अधिष्ठानं पुराणेषु एव। तेन एव अस्माकं संस्कृतिः सर्वाभ्यः संस्कृतिभ्यः विशिष्टा प्रतीयते। अपि च धर्म–अर्थ–काम–मोक्षाणां पुरुषार्थानां सिद्धिः पुराणानां पठनेन भवति। अतः भारतीयसंस्कृतौ पुराणानां महत्त्वम् असाधारणं वर्तते।



## रचनाकाल :

वेदार्थस्य अनुगमनेन पुराणानां रचनाकालः अपि अतीव प्राचीनः अस्ति। वेदानाम्

इव पुराणग्रन्थाः अपि बहूनां शतकानां रचना एव। शङ्कराचार्यस्य सूत्रेषु पुराणानाम् उद्धरणानि दृश्यन्ते। पुराणानाम् उपदेशः सन्मार्गं दर्शयति इति कौटिल्यस्य मतम्। महाभारते वर्णितानां राज्ञां मूलं पुराणेषु प्राप्यते। उपनिषत्सु अपि पुराणानाम् उल्लेखः अस्ति। कलियुगस्य राज्ञां वर्णनेन गुप्तकालात् पूर्वमेव पुराणानां रचनाकालः अस्ति इति निश्चितम्। एवं प्रकारेण ख्रिस्ताब्दात् ६०० (षड्शत) वर्षेभ्यः पूर्वमेव पुराणानि रचितानि सान्ति। सृष्टेः प्रारम्भात् तस्याः लयपर्यन्तम् इतिहासः पुराणेषु क्रमेण समाविष्टः अस्ति। अतः तस्य लक्षणमपि तथैव वर्तते –

**सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।**
**वंशानुचरितं चेति पुराणं पञ्चलक्षणम्॥**

## पुराणानां विभाजनम्

महापुराणानि उपपुराणानि च इति पुराणानां विभाजनं विद्यते।

तत्र **महापुराणानि** यथा–

**मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम्।**
**अनापलिंगकूस्कानि पुराणानि प्रचक्षते॥**

| | | |
|---|---|---|
| मद्वयं – | १. मत्स्यपुराणम् | २. मार्कण्डेयपुराणम् |
| भद्वयं – | ३. भविष्यपुराणम् | ४. भागवतपुराणम् |
| ब्रत्रयं | ५. ब्रह्माण्डपुराणम् | ६. ब्रह्मवैवर्तपुराणम् |
| | | ७. ब्रह्मपुराणम् |
| वचतुष्टयम् | ८. वराहपुराणम् | ९. वामनपुराणम् |
| | १०. विष्णुपुराणम् | ११. वायुपुराणम् |

अ. – १२. अग्निपुराणम्    ना. – १३. नारदपुराणम्
प. – १४. पद्मपुराणम्    लिं. – १५. लिङ्गपुराणम्
ग. – १६. गरुडपुराणम्    कू. – १७. कूर्मपुराणम्
स्क. – १८. स्कन्दपुराणम्

एवं अष्टादश (१८) महापुराणानि सन्ति।



**उपपुराणानि** अपि १८ एव। तानि सन्ति–

१. सनत्कुमारपुराणम्    २. नारसिंहपुराणम्    ३. नारदीयपुराणम्
४. स्कन्दपुराणम्    ५. शिवधर्मपुराणम्    ६. आश्चर्यपुराणम्

| | |
|---|---|
| ७. कापिलपुराणम् | ८. वामनपुराणम् (मानवपुराणम्) |
| ९. औशनसपुराणम् | १०. ब्रह्माण्डपुराणम् |
| ११. वरुणपुराणम् | १२. कालिकापुराणम् |
| १३. माहेश्वरपुराणम् | १४. साम्बपुराणम् |
| १५. सौरपुराणम् | १६. पाराशरपुराणम् |
| १७. मारीचपुराणम् | १८. भार्गवपुराणम् |

महापुराणेषु मत्स्यपुराणे भगवतः विष्णोः मत्स्यावतारः वर्णितः अस्ति। तथैव आन्ध्र राज्ञां प्रामाणिकी वंशावलिः अपि अत्र लभ्यते। मार्कण्डेयपुराणे महाभारते विद्यमानानां प्रश्नानाम् उत्तराणि सन्ति। मार्कण्डेयऋषेः उपदेशरूपेण पुराणम् इदं रचितम् इति मन्यते। भविष्यपुराणे भविष्यवाणी, चतुर्णां वर्णानां कर्तव्यानि, ब्राह्मणधर्मः इत्यादीनां वर्णनं विद्यते। भागवतपुराणे दार्शनिकं विवेचनं लभ्यते अतः तस्य विषये 'विद्यावतां भागवते परीक्षा' इति उक्तिः प्रसिद्धा। ब्रह्माण्डपुराणं तु स्तोत्र-उपाख्यानानां, सच्चारित्र्याणां संग्रहरूपेण वर्तते। ब्रह्मवैवर्त-पुराणे सृष्टिः इयं ब्रह्मणः विवर्तरूपेण विवेचिता। सर्वेष्वपि पुराणेषु निर्दिष्टं ब्रह्मपुराणम् आदिपुराणरूपेण ख्यातम्। वराहपुराणे विष्णोः वराहावतारस्य विस्तृतं वर्णनं वर्तते। अपि तु वामनपुराणे विष्णोः वामनावतारेण सदैव लिङ्गपूजनम्, शङ्कर-पार्वत्योः विवाहवर्णनं कृतं तिष्ठति। वायुपुराणे गुप्तकाले विद्यमानस्य सङ्गीतशास्त्रस्य उल्लेखः विद्यते।

विष्णुपुराणम् इति एकम् एव पुराणं यत्र पुराणानां सर्वाणि लक्षणानि दृश्यन्ते। विषयाणां विविधत्वेन अग्निपुराणं भारतीयसंस्कृतेः साहित्यस्य च विश्वकोशरूपेण प्रसिद्धम्। नारदपुराणं तु वैष्णवधर्मस्य परम्पराः द्योतयति। लिङ्गपुराणे भगवतः शङ्करस्य अष्टाविंशतिः अवताराः वर्णिताः। गरुडपुराणे मृत्योः पश्चात् आत्मनः स्थितयः वर्णिताः सन्ति। कूर्मपुराणे विष्णोः कूर्मावतारः वर्णितः। तथा च स्कन्दपुराणं सर्वेषु अपि पुराणेषु महत्तमं विद्यते यस्य शिवभक्तिः इति मुख्यः वर्ण्यविषयः वर्तते।

एवं पुरातनानि पुराणानि अद्ययावत् चिरनूतनरूपेण भारतीयानां मनःसु अधिष्ठितानि सन्ति।







# ८. आर्षकाव्ये

ऋषिणा रचितं काव्यम् आर्षकाव्यम् इति। अस्माकं संस्कृतौ आर्षकाव्यनाम्ना काव्यद्वयं चिरं प्रतिष्ठितं रामायणं महाभारतं च। अनयोः महाकाव्ययोः भारतीयानां महती श्रद्धा वर्तते। भारतदेशे आचरितानां बहूनाम् उत्सवानां मूलम् अत्रैव अस्ति, सुस्थं समाजं निर्मातुं, जीवनं सरसं सुन्दरं च कर्तुम् आवश्यकानि तत्त्वानि अनयोः महाकाव्ययोः प्राप्यन्ते, जीवनमूल्यानि, चरित्राणां संयोजनम्, राजनीतिवर्णनम्, आहार–व्यवहार–वर्णनम्, पर्यावरणजागर्या इत्यादिभिः विविधैः विषयैः परिपुष्टं भवति इदं महाकाव्यद्वयम्, एतयोः द्वयोः परिचयः अत्र दीयते।

## रामायणम्

'आदिकाव्यम्' इति नाम्ना रामायणं चिरं विराजितम्। मर्यादापुरुषस्य पुरुषोत्तमस्य रामचन्द्रस्य चरित्रं प्रतिपाद्य आदर्शभूतं विद्यते इदं महाकाव्यम्। अस्य महाकाव्यस्य रचयिता महर्षिः वाल्मीकिः 'अतः महर्षिः वाल्मीकिः 'आदिकविः' इति संस्कृतसाहित्ये प्रसिद्धः।



रामायणस्य विषये एका कथा प्रसिद्धा। एकस्मिन् दिने स्नानार्थं तमसानद्याः तीरं प्रति गमनसमये महर्षिः वाल्मीकिः अपश्यत् यत् क्रीडायां रममाणस्य क्रौञ्चयुगलस्य पुरुषक्रौञ्चः व्याधस्य बाणेन मृतः। क्रौञ्चस्य मरणेन विलपन्तीं क्रौञ्चीं महर्षिः दृष्टवान् तदा तस्य दुःखं शलोकरूपेण प्रकटितम् –

**मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।**
**यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥**

तदा ब्रह्मदेवः तत्र आगत्य श्लोकं श्रुत्वा रामायणं रचयितुं वाल्मीकिम् आदिष्टवान्। वाल्मीकिः ब्रह्मदेवस्य आदेशानुसारं भारतीयसंस्कृतेः प्राणभूतं रामायणं रचयितुम् आरब्धवान् इति कथा प्रसिद्धा।

अस्मिन् ग्रन्थे श्लोकानां चतुर्विंशतिसहस्रं (२४०००) वर्तते। रामायणे सप्तकाण्डानि सन्ति। बालकाण्डम्, अयोध्याकाण्डम्, अरण्यकाण्डम्, किष्किन्धाकाण्डम्, सुन्दरकाण्डम्, युद्धकाण्डम् उत्तरकाण्डं च इति काण्डानां नामानि। सप्तसु काण्डेषु वाल्मीकिमहर्षिणा श्रीरामस्य चरित्रम् अनुष्टुप्–छन्दसा सरलया भाषया वर्णितम्।



रामायणे नैकाः आख्यायिकाः सन्ति, रामनवमी, विजयादशमी इत्यादीन् उत्सवान् रामायणम् अधिकृत्य एव भारतीयाः सम्पादयन्ति। रामायणस्य आधारेण नैकाः नाट्यकृतयः काव्यरचनाः च जाताः। रामायणे ये सिद्धान्ताः आदर्शाः च प्रतिपादिताः ते भारतीयान्, संस्कृतिं, जनजीवनं च प्रभावयन्ति, अतः गृहे गृहे रामायणस्य महत्त्वम् अद्यापि वर्तते, 'रामादिवत् प्रवर्तितव्यं न रावणादिवत्' इति सिद्धान्तं सर्वे अनुसरन्ति 'रामायणे प्रतिपादिताः प्रसङ्गा,' प्रसङ्गानाम् उपस्थापनम्, काव्यसौन्दर्य, भाषासौष्ठवं, शब्दसंयोजना इत्यादिभिः कारणैः महाकवेः वाल्मीकेः नाम शाश्वतं स्थास्यति, अतः उक्तम्-

**कूजन्तं रामरामेति मधुरं मधुराक्षरम्।**
**आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम्।।**

▲ ▲ ▲

## महाभारतम

रामायणात् अनन्तरं भारतीयसंस्कृतेः परिचायकरूपेण विराजते द्वितीयम् आर्षकाव्यं नाम 'महाभारतम्' व्यासमहर्षिणा विरचितस्य अस्य महाकाव्यस्य लेखकः आसीत् स्वयं गणपतिः। 'पञ्चमवेदः' इति महाभारतस्य अपरं नाम। रामायणस्य इव महाभारतस्य लोकप्रियता सर्वविदिता, महाभारतस्य श्रेष्ठत्वं प्रतिपादयितुम् उच्यते यत् महाभारते यत्किमपि वर्णितं तत् सर्वं भारते दृश्यते, महाभारते यत् न वर्णितं तत् कुत्रापि न प्राप्यते इति।



**धर्मे अर्थे च कामे च मोक्षे च भरतर्षभ।**
**यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्।।**



विविधेषु क्षेत्रेषु व्यासस्य वैदुष्यं महाभारतस्य अध्ययनेन अनुभूयते, अतः

महाकविरूपेण व्यासस्य पाण्डित्यं प्रतिपादयितुम् उच्यते ''व्यासोच्छिष्टं जगत्सर्वम् इति।''

महाभारतस्य मूलनाम आसीत् 'जयः' इति। जयनामके ग्रन्थे व्यासमहर्षिः कौरव-पाण्डवानां युद्धस्य वर्णनम् अष्टशतोत्तर अष्टसहस्त्रं (८,८००) श्लोकेषु कृतवान्, तदनु व्यासशिष्येण वैशम्पायनेन भरतकुलोत्पन्नानां राज्ञां वर्णनं कृत्वा अस्य ग्रन्थस्य श्लोकसंख्या चतुर्विंशतिसहस्त्रं (२४०००) कृता, तदा ग्रन्थस्य नामपरिवर्तनं कृत्वा 'भारतम्' इति नामकरणम् अभवत्, तदनन्तरं वैशम्पायनस्य शिष्यः सौतिः नैकाः आख्यायिकाः अस्मिन् ग्रन्थे उपयोजितवान् तस्मात् ग्रन्थस्य अस्य श्लोकसंख्या च लक्षपरिमिता अभवत् अतः भारतस्य महाभारतम् इति नामपरिवर्तनम् अभवत्। एवं तिसृषु अवस्थासु परिवर्तनेन सम्प्रति उपलब्धस्य महाभारतस्य श्लोकसंख्या लक्षपरिमिता वर्तते।

**महाभारते अष्टादशपर्वाणि सन्ति -**

आदि-सभा-वन-विराट-उद्योग-भीष्म-द्रोण-कर्ण-शल्य-सौप्तिक-स्त्री-शान्ति-अनुशासन-आश्वमेधिक-आश्रमवासिक-मौसल-महाप्रास्थानिक-स्वर्गारोहणम्

इति तेषां पर्वणां नामानि। सत्यवान्-सावित्रीकथा, शकुन्तला-उपाख्यानम्, शिबिकथा इत्याद्याः नैकाः उपकथाः महाभारते सन्ति।



भारतीयसंस्कृतौ प्रमुखः ग्रन्थः श्रीमद्भगवद्गीता महाभारतस्य भीष्मपर्वणः अंशविशेषः अस्ति। बहूनि नाटकानि काव्यानि च महाभारतस्य आधारेण रचितानि। धर्मस्य जयः अधर्मस्य पराजयः इति सन्देशं ददाति महाभारतम्। महाभारते विविधैः चरित्रैः राजनीतेः स्वरूपं, स्त्रीणां सम्माननं, कर्तव्यपरायणता इत्यादयः विषयाः व्यासमहर्षिणा सुष्ठु प्रतिपादिताः। महाभारतं न केवलं भारतस्य प्राचीनतमम् इतिहासं प्रतिपादयति परं तदानीन्तनी समाजस्थितिः, जनानां जीवनशैली अपि अस्मिन् ग्रन्थे प्रतिबिम्बिता। दुर्योधनस्य लोभः, द्रौपद्याः प्रतिज्ञा, युधिष्ठिरस्य सत्यनिष्ठा इत्यादिभिः प्रसङ्गैः व्यासमहर्षिणा एतत् प्रमाणीकृतं यत् कृतस्य फलम् आत्मना एव भोग्यम् सर्वथा न्यायस्य, सदाचारस्य सत्यस्य च मार्गः अनुसर्तव्यः इति सदेशं दत्त्वा विश्ववाङ्मये महाभारतं मणिः इव चिरं तिष्ठति।





# १. संस्कृत-महाकवयः

विश्वस्य प्राचीनतम -भाषारूपेण विद्यमाना भाषा संस्कृतभाषा। काव्य-नाटकादिभिः एतां भाषां समृद्धां कुर्वन्तः महाकवयः निश्चयेन गौरवास्पदं स्थानं लभन्ते। एतां साहित्यपरम्परां भूषयत्सु महाकविषु महाकविः 'वाल्मीकिः' इति अग्रगण्यः। तेन रचितं 'रामायणम्' इति आदिकाव्यरूपेण कथ्यते। तदनन्तरं व्यासविरचितं 'महाभारतम्' इत्यपि आर्ष-महाकाव्यरूपेण जगति प्रसिद्धम्। एते द्वे अपि महाकाव्ये अग्रे अभिजातकवीनां कृते मार्गदर्शकि संजाते।

**भास** :- अभिजातसाहित्ये महाकविः भासः अन्यतमं स्थानं भूषयन् वर्तते। तस्य कालविषये यद्यपि मतभेदः दृश्यते, तथापि ख्रिस्ताब्दस्य द्वितीयशतक - चतुर्थशतकयोः मध्ये एव अस्य कालः स्वीकृतः। दक्षिणभारते मनलिक्करस्थिते मठे भासस्य त्रयोदश (१३) नाटकानि उपलब्धानि। एतासु कृतिषु तस्य नामोल्लेखः नास्ति। तथापि तस्य नाटकानां संग्रहः 'भासनाटकचक्रम्' इति नाम्ना प्रसिद्धः। रामायणं, महाभारतं उदयनकथाः, शूद्रकचरितम् इति तस्य नाटकानाम् आधार ग्रन्थाः। 'स्वप्नवासवदत्तम्' इति नाटकं तु अद्य अपि सहृदयान् , वाचकान् आनन्दयति। तस्य नाटकचक्रमेव तदग्रकवीनां कृते प्रेरणादायकम् अभवत्।

**कालिदास** : -भासात् अनन्तरं महाकवेः कालिदासस्य स्थानम् उच्चतमं वर्तते। स्वप्रतिभया एषः 'कविकुलगुरुः' इति पदवीं प्राप्तवान्। तस्य सप्तकृतिषु महाकाव्यं, खण्डकाव्यम्, नाटकम् एतेषां त्रयाणाम् अपि समावेशः अस्ति। उपमा-अलङ्कारे प्रावीण्येन 'उपमा कालिदासस्य' इति उक्तिः प्रसिद्धा। कालिदासः **दीपशिखा-कालिदासः** इति प्रसिद्धः। पञ्चमहाकाव्येषु रघुवंशम् नवदशसर्गैः बद्धम्। कुमारसम्भवं च सप्तदशसर्गेषु विद्यते।



**भारविः** -कालिदासात् अनन्तरं महाकविः भारविः महाकाव्य-रीतिम् अनुसरन् दृश्यते। तस्य एका एव रचना 'किरातार्जुनीयम्' इति महाकाव्यम् अस्ति। अस्मिन् अष्टादशसर्गेषु किरातरूपस्य शिवस्य अर्जुनस्य च कथा वर्णिता।  महाभारते वनपर्वणि अयं कथाभागः दृश्यते। 'अर्थगौरवम्' इति भारवेः वैशिष्ट्यम् अस्ति। तस्य 'सहसा विदधीत न क्रियाम् अविवेकः परमापदां पदम्' इति सूक्तिः

चिरं मार्ग दर्शयति। भारविः **आतपत्र-भारविः** इति प्रसिद्धः।

**माघः** -भारवेरनन्तरं महाकविः माघः अपि असाधारणः। वैदुष्यपूर्णं 'शिशुपालवधम्' इति तस्य एकमेव महाकाव्यम्। अतः तत् 'माघकाव्यम्' इति नाम्ना अपि प्रसिद्धम्। उपमा, अर्थगौरवं पदलालित्यम् एते त्रयः अपि गुणाः माघस्य काव्ये सन्ति। राजनीतिः अस्य काव्यस्य मुख्यः विषयः। अस्मिन् विंशतिसर्गाः सन्ति। माघः **घण्टा-माघः** इति प्रसिद्धः।

**श्रीहर्षः**- श्रीहर्ष इति महाकविषु अन्यतमः। सः 'नैषधीयचरितम्' इति महाकाव्यं द्वाविंशति-सर्गेषु रचितवान्। तस्य मूलस्रोतः महाभारतस्य 'नलोपाख्यानम्' अस्ति। तस्मिन् नलदमयन्त्योः प्रेम्णः विवाहस्य च कथा वर्णिता वर्तते। पञ्चमहाकाव्येषु किरातार्जुनीयम्, शिशुपालवधम्, नैषधीयचरितम् च एतानि बृहत्त्रयी इति ख्यातानि।



**भवभूतिः**- महाकविः भवभूतिः अपि महाकविषु अग्रगण्यः वर्तते। तस्य मालतीमाधवम् महावीरचरितम् उत्तररामचरितम् इत्येताः तिस्रः रचनाः सन्ति। उत्तररामचरिते भवभूतिः विशिष्यते इति तस्य विषये ख्यातम् अस्ति यत्र रामायणकथायाः उत्तरभागः वर्णितः।

**बाणभट्टः**- गद्यप्रकारस्य सार्वभौमः महाकविः बाणभट्टः संस्कृतसाहित्ये सर्वमान्यः। कादम्बरी, हर्षचरितं च एते द्वे बाणभट्टस्य गद्यकाव्ये। जीवनस्य प्रत्येकम् अंशः बाणेन स्पृष्टः। अतः 'बाणोच्छिष्टं जगत्सर्वम्' इति उक्तिः प्रसिद्धा। तथैव 'गद्यं कवीनां निकषं वदन्ति' इत्यपि प्रसिद्धम्।



# १०. संस्कृते विज्ञानम्



विज्ञानं नाम किम्? प्रयोगस्य माध्यमेन कस्य अपि विषयस्य सिद्धिः। संपूर्णं विश्वं विज्ञानम् एव। एकः अपि पदार्थः एवं न अस्ति यः विज्ञानस्य विषयः न अस्ति। अतः प्रयोगस्य माध्यमेन पदार्थस्य ज्ञानम् एव विज्ञानम्। प्राचीनात् कालात् मानवः प्रपञ्चस्य ज्ञानं प्रयोगस्य माध्यमेन प्राप्य स्वं जीवनं सुखमयं कृतवान्। प्रपञ्चम् आत्मानं च ज्ञातुं अधिकं प्रयत्नं कृतवान्। भारतदेशे प्राचीनात् कालात् विज्ञानम् अस्ति। संस्कृतभाषया विज्ञानस्य प्रतिपादनं कृतम्। संस्कृते विज्ञानसाहित्यं भारतदेशस्य निधिः।

वेदेषु विज्ञानस्य मूलानि सन्ति। तस्मिन् काले एव वृक्षाणां वनस्पतीनां महाभूतानां लोहानां धातूनां कृमीणां रोगाणां सूक्ष्माणां पदार्थानां च वर्णनं वेदेषु कृतम्। भाषाविज्ञाने पाणिनेः **अष्टाध्याय**ी इति ग्रन्थः अधुना अपि विश्वे प्रसिद्धः अस्ति। विश्वे सर्वप्रथमः व्याकरणग्रन्थः अयम् इति वक्तुं शक्यते। कौटिल्यस्य **अर्थशास्त्र** समाजस्य स्वरूपम् आर्थिकं व्यवहारं च प्रतिपादयति। अत्र आधुनिकस्य कॉर्पोरेट्-समाजस्य कृते अपि आवश्यकाः अर्थविषयाः सन्ति। भारतदेशः सर्वदा **गणितशास्त्र** अग्रे भवति। प्राचीने काले आर्यभटः, वराहमिहिरः, भास्कराचार्यः लगधः अन्ये च **खगोलशास्त्र** गणितशास्त्रे च महत् कार्यं कृतवन्तः। आधुनिकः पै-सिद्धान्तः प्राचीने गणितशास्त्रे अपि अस्ति। ग्रहाणां दूरं वैशाल्यं परिणामः इत्यादिकं खगोलशास्त्रे चर्चितम्।

वराहमिहिरस्य **बृहत्संहिता** इति ग्रन्थः प्राचीनस्य विज्ञानस्य उत्तमम् उदाहरणम् अस्ति। भूकम्पः, भूगर्भजलम् अन्ये अपि विज्ञानस्य विषयाः अस्मिन् ग्रन्थे चर्चिताः। वैशेषिकदर्शने **परमाणु-विचार**ः अस्ति। संपूर्णः प्रपञ्चः परमाणुद्वारा निर्मितः इति परमाणुवादः। भोजमहाराजस्य **समराङ्गण-सूत्रधार** इति ग्रन्थः विश्वकोशः। अस्मिन् ग्रन्थे नगरस्य निर्माणं गृहसमुदायस्य निर्माणम् अन्ये अपि विषयाः चर्चिताः।





प्राचीने भारतदेशे **कृषिशास्त्रं वृक्षशास्त्रम्** अपि अध्ययनस्य विषयः आसीत्। पराशरस्य कृषिशास्त्रं शूरपालस्य वृक्षायुर्वेदः अन्ये अपि ग्रन्थाः कृषिविज्ञानं, वृक्षाणाम् वर्धनस्य विज्ञानं वर्णयन्ति।



अलङ्कारः आभूषणानि इति अपि भारते शास्त्ररूपेण विषयाः चर्चिताः। **चरकसंहिता सुश्रुतसंहिता** अन्ये अपि ग्रन्थाः जीवनं सुखमयं आरोग्यमयं च कर्तुं विविधानि औषधानि वर्णयन्ति। सुश्रुतः प्राचीने एव काले **प्लस्टिक्-सर्जरी** नाम शस्त्रक्रियां कृतवान्।

भरद्वाजमहर्षेः **वैमानिकशास्त्रम्** अस्माकं विमानविज्ञानस्य निदर्शनम् अस्ति। विमानस्य कल्पना, निर्माणं, प्रकाराः विमानस्य चालकस्य गुणाः, विमाने दर्पणस्य निर्माणं, धातुः इत्यादयः बहवः विषयाः अत्र चर्चिताः। नागार्जुनाचार्यस्य **रसशास्त्र** महत् योगदानम् अस्ति। रसायनशास्त्रे सः महत् कार्यं कृतवान्। प्राचीने काले **लोहशास्त्रम्** अपि विकसितं विज्ञानम् अस्ति। दिल्लीनगरे स्थितः लोहस्तम्भः, जंतर-मंतर, उज्जयिनी-वेध-शालादीनि अन्यानि अपि भारतदेशस्य विज्ञानस्य प्रतीकानि सन्ति।





सर्वस्य विज्ञानस्य आधारेण मनुष्याणां जीवनं सुखमयं शान्तिमयं च कर्तुम् अस्माभिः विज्ञानशास्त्रस्य अध्ययनं कर्तव्यम् अस्ति। पतञ्जलिमहर्षिणा प्रसारितं योगशास्त्रमपि मानवजीवनस्य विज्ञानम् एव। मानवस्य शरीरं मनः आत्मा इत्येतेषां सर्वेषां समग्रं स्वास्थ्यं योगाभ्यासेन भवति। संपूर्णे विश्वे योगशास्त्रस्य महत्त्वं सर्वे जानन्ति।







# ११. शिक्षा – आयोगाः

स्वतन्त्रताप्राप्तेः परं भारतसर्वकारः भारतीयशिक्षां सुनियोजयितुं सुसङ्घटयितुं, सुविकासयितुं च दृढसंकल्पम् अकरोत्। तदनन्तरं भारतसर्वकारेण शिक्षाप्रणाल्याः सर्वेक्षणाय परामर्शप्रदाना आयोगाः निर्मिताः। तेषु–

१. विश्वविद्यालय–आयोगः,
२. माध्यमिकशिक्षा–आयोगः,
३. प्राथमिकशिक्षा–आयोगः,
४. संस्कृतशिक्षा–आयोगः

इति एते महत्त्वपूर्णाः भवन्ति। तेषां मार्गदर्शनेन शिक्षामन्त्रालयः कार्यं कारयति। भारतीयशिक्षायां इमे आयोगाः महत्त्वपूर्णं स्थानम् वहन्ति।

## १. विश्वविद्यालय–आयोगः

उच्चशिक्षाप्रणाल्याः दोषान् दूरीकर्तुम् अन्तर्विश्वविद्यालयशिक्षापरिषदः, केन्दीयशिक्षापरामर्शसमितेः च कथनानुसारं भारतसर्वकारः अखिलभारतीयस्तरे विश्वविद्यालयशिक्षा–आयोगस्य निर्माणं १९४८ तमे वर्षे नवम्बरमासस्य चतुर्थे (४) दिनाङ्के अकरोत्। अस्य आयोगस्य अध्यक्षः डॉ. सर्वेपल्ली राधाकृष्णन महाभागाः आसन्। अत अस्य आयोगस्य ''राधाकृष्णन् आयोगः'' इति अपि नाम अस्ति।



भारतीयविश्वविद्यालयीयशिक्षायाः, अनुसंधानस्य उद्देश्यम्, विश्वविद्यालय–संवहन– नियन्त्रण–कार्यक्षेत्रादीनां निर्णयः, उच्चशिक्षायाः परीक्षाक्रमस्य स्तरोन्नयनस्य च विचारः, शिक्षायाः अवधिः, पाठ्यक्रममाध्यमम्, विश्वविद्यालयानां स्थापनम्, अध्यापकयोग्यता–वेतन–कार्याधिकाराः, छात्राणामनुशासनं, छात्रावासादीनां संयोजनम्'' इत्यादिषु विंशतिविषयेषु तत्र चिन्तनं कृतम्।

**आयोगस्य प्रमुखविचाराः–** विश्वविद्यालयीयशिक्षा व्यावसायिक – वाणिज्यक– राजनीतिक्षेत्रेषु विकासार्थं [illegible]। बौद्धिकविकासाय, प्रजातन्त्र–सफलीकरणाय, राष्ट्रियताया विकासाय च भवेत्। उच्चशिक्षायां पाठ्यपुस्तकापेक्षया पाठ्यविषयाऽधारिताः संदर्भग्रन्था एव भवेयुः। स्नातकोत्तरस्तरे कक्षोपस्थितेः प्राधान्यं न भवेत्। स्नातकपाठ्यक्रमः त्रिवर्षीयः भवेत्। पाठ्यक्रमः सामान्यस्नातकानां कृते द्विवर्षीयः, प्रतिष्ठा (Honours) स्नातकानां

कृते एकवर्षीयः च स्यात्। शिक्षायाः माध्यमरूपेण आङ्गलभाषास्थाने प्रादेशिकभाषाः एव भवेयुः। स्नातकोत्तरस्तरे प्रशिक्षणाय अनुसंधानकार्याय च प्राधान्यं देयम्। अनुसन्धानछात्राः राष्ट्रियस्तरे चिताः भवेयुः।

## २. माध्यमिकशिक्षा-आयोगः

स्वतन्त्रताप्राप्तेः अनन्तरं केन्द्रीयशिक्षापरामर्शकपरिषदः परामर्शेण भारतसर्वकारेण २३-९-५२ दिने मद्रासविश्वविद्यालयस्य उपकुलपतीनां डॉ. आकार्ट लक्षणस्वामि मुदलियारमहाशयानाम् आध्यक्ष्ये माध्यमिकशिक्षायोगस्य निर्माण कृतम। तत्र उल्लेखिताः विषयाः एवं भवन्ति -



**१) प्रचलितमाध्यमिकशिक्षायाः दोषाः** परम्परागतपद्धत्यनूसारं पाठनपरीक्षा प्रणाल्यौ, सङ्कुचितपाठ्यक्रमः, व्यवहारिकज्ञानाभावः, अनुशासनहीनता, पुस्तकीयज्ञानम्, उच्चशिक्षाभिमुखैकपक्षीयत्वं च प्रचलितमाध्यमिकशिक्षायाः प्रमुखाः दोषाः भवन्ति।

**२) शिक्षायाः उद्दिष्टम्-** जनतन्त्रीयनागरिकतायाः विकासः, व्यवहारिककुशलतायाः उन्नतिः, व्यक्तित्वस्य विकासः, नेतृत्वविकासः, इति एतानि माध्यमिकशिक्षायाः प्रमुखानि उद्दिष्टानि स्युः।

**३) माध्यमिकशिक्षायाः नवीनस्वरूपम्-** प्राथमिकशिक्षायाः अनन्तरं ११-१७ वयस्केभ्यः बालकेभ्यश्च सप्तवर्षावध्यात्मकः ३+४ रूपेण विभक्तः कालः माध्यमिकोच्चतरमाध्यमिकशिक्षयोः स्यात्। माध्यमिकविद्यालयाः बहूद्देशीयाः बहवः ऐच्छिकपाठ्यक्रमयुक्ताश्च भवेयुः। ग्रामनगरविद्यालयाः माध्यमिकशिक्षा तत्तत्क्षेत्रानुकूलव्यवसायिकविकासशीला स्युः।

**४) पाठ्यक्रमः-** माध्यमिकस्तरे रुचिपूर्णः, विविधतया युक्तः, स्थानीयानाम् आवश्यकतानां पूरकः सामाजिकक्रियापूर्णः, जीवनेन सम्बद्धैः विचारैः युक्तः च पाठ्यक्रमः स्यात्।

**५) पाठ्यपुस्तकानि -** पाठ्यपुस्तकानाम् अपेक्षया सान्दर्भिकाः ग्रन्थाः अधिकाः स्युः। उच्चस्तरीय-पाठ्यपुस्तक-समितिः स्यात्। तत्र पाठ्यपुस्तकानि काले काले परिवर्तितानि स्युः।



**६) छात्राणां शारीरिकं कल्याणम् -**: स्वस्थाना नागरिकाणां निर्माणाय छात्राणां शारीरिकं स्वास्थ्यम् अधिकृत्य आयोगेन स्वास्थ्य-सेवासंस्थायाः क्रियान्वयीकरणं छात्राणां स्वास्थ्यस्य परीक्षा, रुग्णेभ्यः छात्रेभ्यः निशुल्कः उपचारः आवासीयेषु विद्यालयेषु छात्रावासेषु च पौष्टिकस्य भोजनस्य व्यवस्था इत्यादयः अनेकाः परामर्शाः प्रदत्ताः।



## ३. प्राथमिकशिक्षा-आयोगः

भारतसर्वकारेण विश्वविद्यालयशिक्षायोगस्य, माध्यमिकशिक्षायोगस्य च निर्माणात् अनन्तरं १९६४ तमे वर्षे जूलैमासस्य १४ दिनाङ्कैः प्रो.डी.एस्. कोठारीमहोदयस्य नेतृत्वे प्राथमिक-शिक्षायोगस्य निर्माणम् कृतम्। तत्र आयोगेन १९६६ वर्षे २९ दिनाङ्के दत्ते स्वप्रतिवेदने केचन परामर्शाः कृताः, ते एवं सन्ति। यथा-

**१) शिक्षायाः उद्दिष्टम्**- शिक्षा तादृशी स्यात् या मानवजीवनस्य आवश्यकतया आकांक्षया च सह सम्बद्धा सामाजिकं-आर्थिकंसांस्कृतिकं च परिवर्तनम् आनेतुं समर्था स्यात्। राष्ट्रियं लक्ष्यं साधायितुं च उपकारिणी स्यात्।

**२) संरचना** - राष्ट्रियस्तरे शिक्षायाः नवीना संरचना विविधैः विकल्पैः संपन्ना भवेत्। १०+२+३ इति संरचनायाः अनुसारं सामान्यशिक्षा १० वर्षाणि, उच्चमाध्यमिक-शिक्षा वर्षद्वयं, स्नातकस्तरीया उच्चशिक्षा वर्षत्रयं च स्यात् इति।

**३) अध्यापक-स्थितिः** -: आयोगः शिक्षणव्यवसायस्य समुन्नतये शिक्षकाणाम् आर्थिक-सामाजिक-व्यावसायिक-स्थितीनाम् सुधारणं कृत्वा प्रतिभावतां तरुणानाम् आकर्षणं कार्यमिति परामर्शं प्रदाय, वेतनमानं च शिक्षकस्तरानुगुणं परिकल्प्य काले काले तत् वेतनमानं परिवर्तयितुं च आयोगेन सूचना दत्ता।

**४) अध्यापकानां प्रशिक्षणम्** - प्रचलितानां प्रशिक्षणसंस्थानां प्रमुखान् दोषान् निवारयितुम् आयोगेन उपायाः दत्ताः।

**५) पाठ्यक्रमः** - आयोगेन प्राथमिक-माध्यमिक-शिक्षयोः पाठ्यक्रमः चतुर्धा विभज्य स्पष्टीकृतः यत् निम्नप्राथमिकः स्तरीयः प्राथमिकस्तरीयः, माध्यमिकस्तरीयः, उच्चमाध्यमिकस्तरीय इति। तत्र सर्वत्र भाषा, गणितं, विज्ञानं, वातावरणस्य अध्ययनम् इति विषयाः स्युः।

**६) पाठ्यक्रमे त्रिभाषासूत्रम्** - सामन्यशिक्षया सह सृजनात्मक-क्रियाणां कार्यानुभवस्य, समाजसेवायाः च शिक्षाः भवेयुः इति आयोगेन उक्तम्। भाषासूत्रेऽपि स्वीयं नूतनं मतं प्रतिपादितम् यथा-

१. मातृभाषा प्रादेशिकभाषा च। २. राजभाषा सहराजभाषा च (हिन्दी/अंग्रेजी)।
३. आधुनिकी भारतीया भाषा, युरोपीया भाषा इति।



**७) उच्चशिक्षा** - नवीनस्य विज्ञानस्य अन्वेषणाय, राष्ट्रियचेतनायाः नेतृत्वाय, प्रतिभायाः च विकासाय, देशीयकृषि-कला-विज्ञान-प्रौद्योगिकानां-विकासाय च उच्चशिक्षा भवेत् इति आयोगेन प्रतिपादितम्।

✦✦✦

# १२. ग्रन्थालयमहत्त्वम्

ग्रन्थस्य आलयः ग्रन्थालयः इति उच्यते। तत्र ग्रन्थानां सङ्ग्रहः विधीयते। ग्रन्थालये तस्मिन् आदानप्रदानयोः व्यवस्था कल्पिता भवति। नियमिते समये पाठकाः आगत्य यथारुचिः पुस्तकानि पत्रपत्रिकादीनि च आदाय पठन्ति। ग्रन्थालये विभिन्नप्रकारकाणि पुस्तकानि सङ्गृहीतानि भवन्ति यथा मुद्रितपुस्तकानि, हस्तलिखितानि इत्यादि। तथैव ग्रन्थैः सह ग्रन्थालये पत्रिकाणां, वृत्तपत्राणां , मासिक–पाक्षिकपत्रिकादीनां च सङ्कलनं कृतं भवति। येषां सविधे पुस्तकानां क्रयणाय धनं न भवति ते अपि पुस्तकानि प्राप्तुं शक्नुवन्ति। ग्रन्थालये निर्धनाः छात्राः विनामूल्यं पठनार्थं पाठ्यपुस्तकानि प्राप्नुवन्ति। न केवलं छात्राः अपि तु अध्यापकाः, विद्वांसः संशोधकाः अपि स्वकीयज्ञानवृद्धयर्थम्, अनुसन्धानार्थं च ग्रन्थालये विद्यमानानां पुस्तकानाम् उपयोगं कुर्वन्ति। ग्रन्थालयं विना तत्कार्यम् असम्भवमेव।

यथा दीपकाभावे सर्वत्र अन्धकारो दृश्यते तथा ज्ञानरहितस्य मनुष्यस्य कृते सर्वाः दिशः शून्याः भवन्ति। अतः एव उच्यते खलु 'ज्ञानं तृतीयं मनुजस्य नेत्रम्' इति। एतादृशस्य ज्ञानस्य प्राप्तेः आलयः भवति ग्रन्थालयः। पत्रपत्रिकाद्वारा देशविदेशयोः घटनानां वृत्तान्तानां ज्ञानं भवति। विभिन्नपुस्तकेभ्यः ज्ञानस्य सर्वक्षेत्राणि अनायासेन पुरतः आयाति। ग्रन्थालयस्य उपयोगेन, स्थापनेन च महान् लाभः वर्तते। शिक्षाप्रचारस्य साधनेषु ग्रन्थालयस्य महत्त्वपूर्णं स्थानं वर्तते।

ग्रन्थालये विभिन्नपुस्तकानां ग्रन्थानां संरक्षणं सुष्ठु क्रियते। एतेषु एव पुस्तकेषु अस्माकं प्राचीनं ज्ञानविज्ञानं, अस्माकं परम्परा, संस्कृतिः कला, वाणिज्यादि विषयाः साधु संरक्षिताः भवन्ति। भारतीये इतिहासे नालन्दा, तक्षशिला, वैशाली इ. विश्वविद्यालयाः तेषां ग्रन्थालयकारणादेव सुप्रसिद्धाः आसन्। रत्नोदधिः, रत्नसागरः, रत्नरञ्जकादि नाम्ना विशालभवनानि नालन्दा विश्वविद्यालये आसन् यत्र कोटिशः ग्रन्थानां सङ्ग्रहः कृतः आसीत्। एतादृशग्रन्थालये विद्यमानज्ञानप्राप्तये आसमन्तात् परकीयजनाः अध्ययनार्थम् अत्र आगताः। पुस्तकानां महत्त्वं सर्वतोऽपरि आसीत्। ज्ञानस्य रूपमिदं प्राथमिकतया प्राधान्येन च संरक्षणीयम्। अतः एव पुस्तकविषये एवम् उच्यते –



**जलाद् रक्षेत् तैलाद् रक्षेत् रक्षेत् शिथिलबन्धनात्।**
**मूर्खहस्ते न दातव्यम् एवं वदति पुस्तकम्।।**



# १३. वेदाङ्गज्योतिषम्

**"प्रत्यक्षं ज्योतिषं शास्त्रं चन्द्राकौं यत्र साक्षिणौ।"**



सृष्टेः मूलमन्त्रस्य भगवतो वेदस्य षडाङ्गेषु ज्योतिषम् चक्षुरूपं भवति। वेदोक्तं यज्ञादि क्रियाकलापानां अनुष्ठानार्थं योग्यकालस्य निर्धारणं ज्योतिषशास्त्रस्य आधारेण क्रियते। अतः ज्योतिषं वेदाङ्गत्वेन स्वीकृतं वर्तते। ज्योतींषि अधिकृत्य कृतं शास्त्रम् ज्योतिषशास्त्रम्। अर्थात् ग्रहनक्षत्राणां खगोलीयपिण्डानाम् आधारेण कृतं शास्त्रमित्यर्थः। सिद्धान्त–संहिता–होरा इति स्कन्धत्रयाधिष्ठितं ज्योतिषशास्त्रम्। प्रत्यक्षस्य अस्य ज्योतिषशास्त्रस्य कालविधानशास्त्रम् इति अपरं नाम।

सिद्धान्तस्कन्धे ग्रहाणां गति–युतिकालमान–ग्रहणादयः विचाराः वर्ण्यन्ते। भास्कराचार्यः, आर्यभट्टः कमलाकरभट्टः इत्यादयः नैके ज्योतिर्विदः प्रसिद्धाः वर्तन्ते। आर्यभट्टीयम्, सिद्धान्तशिरोमणिः, सिद्धान्ततत्त्वविवेकादि ग्रन्थेषु सिद्धान्तविचाराः विषदरूपेण चर्चिताः।

संहितास्कन्धे जलविज्ञानं, भूविज्ञानं, वृक्षायुर्वेदः, वास्तुविद्या, मुहूर्तविचारः, ग्रहचारः इत्यादयः नैके विचाराः विस्तृततया वर्णिताः वर्तन्ते। वराहमिहिरचार्यस्य बृहत्संहिता ग्रन्थः स्कन्धेऽस्मिन् अत्यन्तं प्रसिद्धः ग्रन्थः वर्तते।

होरास्कन्धः फलितज्योतिषत्वेन प्रसिद्धः। जातकस्य तत्कालीन् ग्रहस्थित्यनुरोधेन शुभाशुभफलविचाराः स्कन्धेऽस्मिन् विचार्यन्ते। बृहज्जातकम् फलदीपिका, बृहत्पाराशरहोराशास्त्रम्, जातकपारिजातः इत्यादयः नैके ग्रन्थाः प्रसिद्धाः वर्तन्ते। वराहमिहिराचार्यः, मन्त्रेश्वरः पराशरः, वैद्यनाथादयः एते प्रसिद्धाः आचार्याः। स्कन्धेऽस्मिन् जातकस्य शुभाशुभफलविचारसन्दर्भे द्वादशभावविचाराः मुख्यत्वेन विचार्यन्ते।



**यथा शिखा मयूराणां नागानां मणयो तथा।**
**तद्वद्वेदाङ्गशास्त्रेषु ज्योतिषं मूर्धनिसंस्थितम्॥**



# पद्यविभागः

# १. विद्या प्रशंसा

**१. सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम् ।**
**अहार्यत्वादनर्घत्वादक्षयत्वाच्च सर्वदा ।।**

**अन्वय -** सर्वदा अहार्यत्वात् अनर्घत्वात्, अक्षयत्वात् च विद्या एव सर्वद्रव्येषु अनुत्तमं द्रव्यम् इति आहुः (वदन्ति)।

**भाषांतर-**सर्व द्रव्यांमध्ये विद्या हे श्रेष्ठ धन आहे कारण त्याचे हरण करता येत नाही, मूल्य ठरविता येत नाही आणि कितीही दान केले तरी त्याचा क्षयही होत नाही.

**२. विद्या ददाति विनयं, विनयाद्याति पात्रताम् ।**
**पात्रत्वाद् धनमाप्नोति धनाद्धर्मः ततः सुखम् ।।**

**अन्वय -** विद्या विनयं ददाति, विनयात् पात्रतां याति, पात्रत्वात् धनम् आप्नोति, धनात् धर्मम् आप्नोति. ततः सुखम् आप्नोति ।

**भाषांतर-**विद्याच मनुष्याला विनय देते. विनयामुळे त्याला पात्रता प्राप्त होते आणि या पात्रतेमुळेच धन, धनामुळे धर्म आणि सुख त्याला प्राप्त होते. तात्पर्य, विद्येच्या अभावी मनुष्याला कोणताही गुण प्राप्त होत नाहीत.

**३. अपूर्वः कोऽपि कोशोऽयं तव भारति ।**
**व्ययतो वृद्धिमायाति, क्षयमायाति संचयात् ।।**

**अन्वय -** भारति तव अपूर्वः कोऽपि कोशः विद्यते । व्ययतो वृद्धिमायाति, संचयात् क्षयमायाति ।

**भाषांतर-**हे शारदे, तुझा ज्ञानदानाचा खज़िना विलक्षण आहे. तो खर्च केल्याने अधिकाधिक वृद्धिंगत होतो आणि त्याचा संग्रह केला असता तो क्षय पावतो. भौतिक धनाच्या कोषापेक्षा असामान्य असल्यामुळेच सरस्वतीचा कोष अनमोल आहे. श्रेष्ठ आहे.



**४. सुखार्थिनः कुतो विद्या, कुतः विद्यार्थिनः सुखम् ।**
**सुखार्थी वा त्यजेद् विद्यां विद्यार्थी वा त्यजेत्सुखम्।।**

**अन्वय -** सुखार्थिनः कुतः विद्या, विद्यार्थिनः कुतः सुखम्। सुखार्थी वा विद्यां

त्यजेत्, विद्यार्थी वा सुखम् त्यजेत्।

**भाषांतर**-सुखांच्या मागे धावणाऱ्या व्यक्तीला विद्या प्राप्त होत नाही, या विद्येसाठी सुखांचा त्याग केला पाहिजे. सुखाची आशा असलेल्या मनुष्याने विद्येचा त्याग केला पाहिजे आणि विद्येची आस असलेल्या व्यक्तीने सुखांचा त्याग केला पाहिजे. कारण सुखार्थी मनुष्याला विद्या प्राप्त होत नाही आणि विद्यार्थी मनुष्याला सुख प्राप्त होत नाही.

**५. विद्वत्वं च नृपत्वं च नैव तुल्यं कदाचन।**
**स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ।।**

**अन्वय** - विद्वत्वं च नृपत्वं च कदाचन तुल्यं न एव।स्वदेशे राजा पूज्यते, सर्वत्र विद्वान् पूज्यते ।।

**भाषांतर**-विद्वान् व्यक्ती आणि राजा यांची तुलना होऊ शकत नाही. कारण राजाला फक्त स्वतःच्या देशात मान मिळतो तर विद्वानव्यक्ती मात्र सर्वत्र पूजिली जाते.



## २. सज्जनप्रशंसा

**वदनं प्रसादसदनं सदयं हृदयं सुधामुचो वाचः ।**

**करणं परोपकरणं येषां केषां न ते वन्द्याः ।।१ ।।**

**अन्वयः** - येषां वदनं प्रसादसदनं, सदयं हृदयं, वाचः सुधामुचः, करणं परोपकरणं ते केषां न वन्द्याः ।

**भाषांतर** - ज्यांचे मुख प्रसन्न आहे, हृदय दयापूर्ण आहे, तसेच त्यांची वाणी अमृतासारखी असून परोपकार हेच त्यांचे कार्य आहे असे लोक कुणाला वंदनीय वाटणार नाही. म्हणजेच त्यांना सर्व लोक वंदन करतात.

**निर्गुणेष्वपि सत्त्वेषु दयां कुर्वन्ति साधवः ।**

**न हि संहरते ज्योत्स्नां चन्द्रश्चाण्डालवेश्मसु ।।२ ।।**

**अन्वयः** -साधवः निर्गुणेषु सत्त्वेषु अपि दयां कुर्वन्ति ।(यथा) चन्द्रः चाण्डालवेश्मसु ज्योत्स्नां न हि संहरते ।

**भाषांतर**- ज्याप्रमाणे चंद्र हा चांडाळाचे म्हणजेच दुष्टाचे घरसुद्धाआपल्या प्रकाशाने व्यापून टाकतो. त्याचप्रमाणे सज्जनपुरुष देखील निर्गुण प्राण्यांवरही दया करतात.

**उदये सविता रक्तो रक्तश्चास्तमये तथा ।**

**सम्पत्तौ च विपत्तौ च महतामेकरूपता ।।३ ।।**

**अन्वयः** - सविता उदये रक्तः तथा च अस्तमये (अपि) रक्तः (भवति) ।(तथैव) सम्पत्तौ च विपत्तौ च महताम् एकरूपता( दृश्यते )।

**भाषांतर** - ज्याप्रमाणे सूर्य हा उदयाच्या वेळी आणिअस्ताच्या वेळी म्हणजेच मावळतांना लालरंगाचाच दिसतो। त्याचप्रमाणे सुख असो वा दुःखअसो महान लोकांचा स्वभाव हा सारखाच असतो. याचाच अर्थ सज्जनांच्या व्यवहारात दोन्ही स्थितीत कुठलाच फरक पडत नाही .

**छायामन्यस्य कुर्वन्ति तिष्ठन्ति स्वयमातपे ।**

**फलान्यपि परार्थाय वृक्षाः सत्पुरुषा इव ।।४ ।।**

**अन्वयः** -सत्पुरुषाः इव वृक्षाः अन्यस्य छायाम् कुर्वन्ति, स्वयम् आतपे तिष्ठन्ति ।(तथैव)फलानि अपि परार्थाय (यच्छन्ति) ।



**भाषांतर**- सत्पुरुषाप्रमाणे वृक्ष स्वतः ऊन्हात उभे राहून दुसऱ्यांना सावली देतात. तसेच आपली फळे सुद्धा इतरांसाठीच ठेवतात.

**अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम् ।**

**सदा लोकहिते युक्ता रत्नदीपा इवोत्तमाः ।।५ ।।**

अन्वयः -उत्तमाः (जनाः)रत्नदीपाः इव न स्नेहं न च पात्रं न दशान्तरम् अपेक्षन्ते (अपि तु) सदा लोकहिते युक्ता(भवन्ति)।

**भाषांतर** - रत्नदीप ज्याप्रमाणे प्रकाशदान हेच आपले कर्तव्य मानतो व जगाला कोणत्याही अपेक्षेशिवाय प्रकाशित करीत असतो. त्याचप्रमाणे उत्तमलोक कधीही स्नेहाची, योग्यतेची किंवा अवस्थेची अपेक्षा न करता सतत परोपकार हेच आपले कर्तव्य समजून लोकहित करीत असतात.

**वित्ते त्यागः क्षमा शक्तौ दुःखे दैन्यविहीनता।**
**निर्दम्भता सदाचारे स्वभावोऽयं महात्मनाम्।।६।।**

**अन्वयः** -वित्ते त्यागः, शक्तौ क्षमा, दुःखे दैन्यविहीनता,सदाचारे निर्दम्भता(इति)। अयं स्वभावः महात्मनाम्(भवति)।

**भाषांतर** - धन असतांना त्याचा त्याग करणे, शक्ती असतांना क्षमा करने, दुःख असतांना दैन्याचा अभाव असणे म्हणजेच निराशा नसणे आणि आपला आचार व व्यवहार शुद्ध ठेवणे हाच महानलोकांचा स्वभाव असतो.याचाच अर्थ सज्जनलोकांचा मनावरचा ताबा कधीही ढळत नाही.



# ३. आतिथ्यप्रशंसा

**१. बालो वा यदि वा वृद्धो युवा वा गृहमागतः ।**
**तस्य पूजा विधातव्या सर्वस्याभ्यागतो गुरुः ।।**

**अन्वय -** अभ्यागतः गुरुः वा, बालो वा, वृद्धः वा, युवा वा तस्य सर्वस्य पूजा विधातव्या।

**भाषांतर –**दारी आलेला गुरु असो, बालक असो, वृद्ध असो वा युवक असो त्या सगळ्यांचीच पूजा करावी.

**२. अरावप्युचितं कार्यमातिथ्यं गृहमागते ।**
**छेत्तुः पार्श्वगतां छायां नोपसंहरते द्रुमः ।।**

**अन्वयः –** गृहमागते अरौ अपि उचितम् आतिथ्यं कार्यम्। द्रुमः छेत्तुःपार्श्वगतां छायां न उपसंहरते।

**भाषांतर–**घरी आलेल्या शत्रूचा देखील योग्य तो अतिथिसत्कार करावा. झाड तोडायला आलेल्या माणसावरची देखील सावली झाड काढून घेत नाही.

**३. स्वात्मापि शीलेन तृणं विधेयं**
**देया विहायासन भूर्निजापि ।**
**आनन्दबाष्पैरपि कलप्यमम्मः**
**प्रच्छा विधेया मधुरैर्वचोभिः ।।**

**अन्वयः –** शीलेन स्व आत्मा अपि तृणं विधेयम् निज आसन भूः अपि विहाय देया, आनन्दवाष्पैः अपि अम्मः कलप्यम्, मधुरैः वचोभिः प्रच्छा विधेया (अतिथेः)।

**भाषांतर–**अतिथी समोर आपण विनयाने स्वतःला तृणाप्रमाणे समजावे. आपली भूमी सुद्धा सोडून द्यावी. आनंदाश्रूंचे जल द्यावे. मधुरवाणीने कुशलता विचारावी.

**४. अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।**
**स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति ।।**



**अन्वयः –** यस्य ग्रहात् अतिथिः भग्नाशः प्रतिनिवर्तते,
सः तस्मै दुष्कृतं दत्त्वा पुण्यम् आदाय गच्छति।

**भाषांतर–**एखाद्या गृहस्थाच्या दारातून कोणी अतिथि (जेव्हा) निराश होऊन परततो. (तेव्हा) तो त्या गृहस्थासाठी अनिष्ट (पाप) देऊन व पुण्य घेऊन जातो.

